॥ श्रीउच्छिष्टमहागणपति ध्यानम् ॥

मूलाधारे सुयोन्याख्ये चिदग्निवरमण्डले ।
समासीनं पराशक्तिविग्रहं गणनायकम् ॥ १॥

रक्तोत्पलसमप्रख्यं नीलमेघसमप्रभम् ।
रत्नप्रभालसद्दीप्तमुकुटाञ्चितमस्तकम् ॥ २॥

करुणारससुधाधारास्रवदक्षित्रयान्वितम् ।
अक्षिकुक्षिमहावक्षः गण्डशूकादिभूषणम् ॥ ३॥

पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्करम् ।
नीलकान्तिघनीभूतनीलवाणीसुपार्श्वकम् ॥ ४॥

सुत्रिकोणाख्यनीलाङ्गरसास्वादनतत्परम् ।
पत्न्यालिङ्गतवामाङ्गं सप्तमातृनिषेवितम् ॥ ५॥

ब्रह्मविष्णुमहेन्द्रादिसम्प्रपूजितपादुकम् ।
महदद्वयपदोवाच्यपादुकामन्त्रसारकम् ॥ ६॥

नवावरणयज्ञाख्य वरिवस्याविधिप्रियम् ।
पञ्चावरणयज्ञाख्य विधिसम्पूज्यपादुकम् ॥ ७॥

अखण्डकोटिब्रह्माण्डामण्डलेश्वरमव्ययम् ।
रदनाक्षरसम्पूर्णमन्त्रराजस्वरूपिणम् ॥ ८॥

गिरिव्याहृतिवर्णात्ममन्त्रतत्वप्रदर्शकम् ।
अरुणारुणतनुच्छायमहाकामकलात्मकम् ॥ ९॥

महागोप्यमहाविद्या प्रकाशितकलेबरम् ।
चिच्छिवं चिद्भवं शान्तं त्रिगुणादिविवर्जितम् ॥ १०॥

अष्टोत्तरशताभिख्यकलान्यासविधिप्रियम् ।
चिदाकारमहाद्वीपमध्यवाससुविग्रहम् ॥ ११॥

चिदब्धिमथनोत्पन्नचित्सारघनविग्रहम् ।
वाचामगोचरं शान्तं शुद्धचैतन्यरूपिणम् ॥ १२॥

मूलकन्दस्थचिद्देशनवताण्डवपण्डितम् ।
षडम्बुरुहसंस्थायिपरचिव्द्योमभासुरम् ॥ १३॥

अकारादिक्षकारान्तवर्णलक्षितचित्सुखम् ।
अकाराक्षरनिर्दिष्टप्रकाशमयविग्रहम् ॥ १४॥

हकाराख्यविमर्शात्मप्रभादीप्तजगत्त्रयम् ।
महाहंसजपध्यानविधिज्ञातस्वरूपकम् ॥ १५॥

सदोदितमहाप्रज्ञाकारं संसारतारकम् ।
मोक्षलक्ष्मीप्रदातारं कालातीतमहाप्रभुम् ॥ १६॥

नामरूपादिसम्भिन्ननित्यपूर्णचिदुत्तमम् ।
प्रत्यग्भूतमहाप्रज्ञागात्रगोचरविग्रहम् ॥ १७॥

महाकुण्डलिनीरूपं षट्च्क्रनगरेश्वरम् ।
अप्राकृतमहादिव्यचैतन्यात्मस्वरूपिणम् ॥ १८॥

नादबिन्दुकलातीतं कार्यकारणवर्जितम् ।
षडम्बुरुहचक्रान्तः स्फुरत्सौदामिनीप्रभम् ॥ १९॥

तत्त्वमस्यादिवाक्यार्थपरिबोधनपण्डितम् ।
ब्रह्मादिकीटपर्यन्तव्याप्तसंवित्सुधारसम् ॥ २०॥

इच्छाज्ञानक्रियानन्दसर्वतन्त्र स्वतन्त्रिणम् ।
हृदयग्रन्थिभिद्विद्यादर्शनोत्सुकमानसम् ॥ २१॥

पञ्चकृत्यपरेशानं महात्रैपुरविग्रहम् ।
श्रीचक्रराजमध्यस्थशून्यग्राममहेश्वरम् ॥ २२॥

ब्रह्मविद्यास्वरूपश्रीललितारूपधारिणम् ।
वशिन्याद्यावृतं साध्यं अद्वयानन्दवर्धनम् ॥ २३॥

आदिशङ्कररूपेशदक्षिणामूर्तिपूजितम् ।
असंस्पृष्टमहाप्रज्ञाभिख्याद्वैतस्थितिप्रभम् ॥ २४॥

एवं सञ्चितयेद्देवं उच्छिष्टगणनायकम् ।
नीलतारासमेतं तु सच्चिदानन्दविग्रहम् ॥ २५॥